**C09 – Champukavya – Notes -**

Video – 1:31:47 Dated 10th October, 2019

**चम्पूकाव्यम्** – Prose & Poetry Mix। यत्र गद्यं पद्यं सम्मिश्रितं भवति तत् काव्यं चम्पूकाव्यम्।

**इतिहासः - आरम्भः कदा?** – अत्यन्त-प्राचीन-काले एव वैदिक-वाङ्मये एव अस्य बीजानि दृश्यन्ते। गद्य-पद्य-मय-काव्यवर्णनं वेद-संहिता-ब्राह्मणारण्यकोपनिषद्सु उपलब्यते। केचन मन्त्राः वृत्ते, अन्ये च गद्यरूपे भवन्ति तत्र। लौकिकदृष्ट्या आरम्भः विलम्बेन जातः। क्रिस्तशकस्य दशमशतकात् एव चम्पूकाव्यनिर्माणप्रवृत्तिः दृश्यते। यद्यपि **समुद्रगुप्तशासने** गद्यपद्यमय-उल्लेखः दृश्यते (inscriptional evidence is seen), साक्षात् चम्पूकृतयः न उपलभ्यन्ते दशमशतकात् पूर्वम्। मालवराज्य-शासकस्य भोजमहारजस्य **रामायणचम्पूकाव्यम्** एकादशमशतके निर्मितम्। [00:08:06]। अनन्तभट्टस्य **महाभारतचम्पूः**। वेङ्कटाध्वरिमहोदयस्य **विश्वगुणदर्शचम्पूः**। विशिष्य दक्षिणदेशे चम्पूः प्रसिद्घाः। उपत्रिशतचम्पूकाव्येषु द्विशताधिकानि दक्षिणदेशीयाः निर्मिताः। प्रान्तीय-भाषास्वपि चम्पूप्रकाराः निर्मिताः।

**व्युत्पत्तिः** - “चपि” धातोः “उ” प्रत्ययेन चम्पूः (मोक्ष/ज्ञानप्राप्ति-उपायः) । चम्पति/चम्पयतीति चम्पूः। चमत्कृत्य पुनाति सहृदयान् विस्मयीकृत्य प्रसादयतीति चम्पूः। [00:12:30]। अथवा दक्षिणदेशभाषातः सम्पू, चम्बू (रमणीयः इत्यर्थे) इत्यादीनां संस्कृते सञ्ज्ञारूपेण स्वीकारः स्यात्।

**मिश्रकाव्यम्** इति नामान्तरम्।

**भागविच्छेदः** - महाकाव्येषु – सर्गः। गद्यकाव्येषु – उच्छ्वासः। रूपकेषु – अङ्कः। चम्पू काव्येषु – उच्छ्वासः/स्तबकः/आश्वासः/उल्लसः/काण्डम्/तरङ्गः/सर्गः/विलासः/लम्भकः/कल्लोलः/मनोरथः/बिन्दुः /परिच्छेदः इत्यादि नामाभिः विभज्यते (चम्पूकाव्ये एकैकस्य सर्गस्य नामकरणम् एवम्)। [00:20:30]|

**लक्षणम्** – गद्यपद्यमयं काव्यं चम्पूरिति अभिधीयते (कथ्यते) – काव्यादर्शः - दण्डिः। गद्यानुबन्ध-रस-मिश्रित-पद्य-सूक्तिः हृद्या (मनोहरम्) हि वाद्य-कलया कलितेव (मिश्रितमिव) गीतिः – भोजराजः। हेमचन्द्रस्य (जैनालङ्कारिक-शास्त्रज्ञेन) काव्यानुशासने – गद्यपद्यमयी साङ्का सोच्छ्वासा चम्पूः। अज्ञातविद्वान्

– “गद्यपद्यमयी साङ्का सोच्छ्वासा कविगुम्फिता (कवि-निर्मिता)। उक्ति प्रत्युक्ति विष्कम्भशून्या (आख्यानं/वचनम् उपाख्यानं/प्रतिवचनं वा विष्कम्भकं वा (interlude) न भवन्ति यथा रूपकेषु भवन्ति) चम्पूरुदाहृता॥” [00:33:00] (अपवादः – विश्वगुणादर्श-चम्पू-काव्ये वचन-प्रतिवचनं गन्धर्व-द्वय-संवाद-रूपेण दृश्यते एव)

**प्रसिद्धचम्पूकाव्यानि** - त्रिविक्रमदेवस्य - नलचम्पूः। मदालसाचम्पूः। भारतचम्पूः इति अनन्तभट्टस्य। नृसिंहचम्पूः। पारिजातहरणचम्पूः।

**वर्गीकरणम्** - १) **रामायणमाश्रित्य** रचितानि – रामायणचम्पूः, अमोघराघवचम्पूः,.. २) **महाभारतमाश्रित्य** रचितानि – भारतचम्पूः, अभिनवभारतचम्पूः, .. ३) **पुराणमश्रित्य** - भागवतमाश्रित्य अभिनवशङ्कर-नामाङ्कितेन प्रसिद्धाः वेल्लंकोट-रामराय-कवि-सुदीन्द्राः आन्द्रदेशे बहुप्रसिद्धाः भागवतचम्पू इति काव्यं रचितवन्तः। ४) **जिनग्रन्थान्** आश्रित्य – पुरुदेवचम्पूः इत्यादिभिः। ५) **महापुरुषाणां** जीवमाधारीकृत्य – जगद्गुरुदिग्विजयः (अद्वैतपरम्परामाश्रित्य), शङ्करचम्पूः, यतिराचविजयः (रामानुजाचार्यस्य माहत्म्यवर्णनम्),.. ६) **यात्राप्रबन्धात्मकम्** – केरलाभरणचम्पूः, यात्राप्रबन्धाचम्पूः, विश्वगुणादर्शचम्पूः (कल्पनात्मकम् - द्वयोः गन्धर्वयोः भारतपर्यटनवर्णनम्) .. ७) **देवमहोत्सवान्** (देवान् महोत्सवान् च) आधारीकृत्य – इन्दिराभ्युदयचम्पूः, वेङ्कटेशचम्पूः, सुकुमारकविना कृष्णविलासचम्पूः .. ८) **दार्शनिक**-चम्पूकाव्यानि – तत्त्वगुणादर्शचम्पूः .. ९) **काल्पनिक**-चम्पूकाव्यानि – उदयसुन्दरीकथा, यमुनावर्णनम्, विक्रमसेनचम्पूः .. [00:49:30]

**किञ्चित् विस्तारः** –

त्रिविक्रमभट्टस्य - नलचम्पूः (दमयन्तीकथा), मादालसचम्पूः - त्रिविक्रमभट्टः पदप्रयोगनिपुणः। सः वदति – “**किं कवेस्तेन काव्येन? किं काण्डेन धनुष्मता? परस्य हृदये लग्नं न घूर्णयति यत् शिरः**”। काव्यमेकं कस्यापि पठितारस्य हृदयं प्रविश्य तस्य चिन्तनं न जनयति, तर्हि तेन काव्येन किं प्रयोजनम् (यथा धनुष्मतां बाणेन/काण्डेन किं प्रयोजनं येन सक्षमप्रयोगं न स्यात् बाणस्य) इति अर्थे।

यशस्तिलकचम्पूः इति जैन-कवेः सोमदत्तसूरिमहोदयस्य कृतिः – काल्पनिकम् इतिवृत्तम्। यशोधरा, मारिदत्ता इति द्वयोः राज्ञोः वर्णनम्। हरिचन्द्रः – जीवधरचम्पूः। सोण्डलकविः – उदयसुन्दरी।

मालवराज्यस्य भोजराजस्य रामायणचम्पूः – किमर्थं रामयणविषयं स्वीकृतमित सः वर्णयति – "**वाल्मीकि-गीत-रघु-पुङ्गव-कीर्ति-लेशैः तृप्तिं करोमि कथमपि अधुना बुधानाम्**" – वाल्मीकिना रघुपुङ्गवस्य श्रीरामचन्द्रस्य ये कीर्ति-लेशाः गीताः, तैः कीर्तिकणैः, बुधानां तृप्तिं करोमि। "**गङ्गा-जलैः भुवि भगीरथ-यत्न-लब्धैः**" – तानेव गङ्गाजलं आनीय एकः स्वपितॄणां तर्पणं यथा प्रददाति तथा इत्यर्थे। [00:55:30]। रामायणचम्पूकाव्ये अनुप्रासादि अलङ्काराः यमकाः च भवन्ति। बालकाण्डतः सुन्दरकाण्डपर्यन्तमेव रचितं भोजराजेन। अनन्तरकाले लक्ष्मणसूरिः (आन्द्रदेशीयः नूतनकालीयः) युद्धकाण्डस्य रामायण-चम्पूकाव्यं निर्मापितवान्।

आन्द्रदेशस्य कविसम्राट् ज्ञानपीठप्रशस्तिप्राप्तः विश्वनाथ-सत्यनारायणः – रामायण-कल्पवृक्षः इति काव्यम् – किमर्थं पुनः रामायणमश्रित्य कृतिः इति प्रश्नः अस्ति चेत् सः वदति – भवान् प्रतिदिनं भोजनं करोति? एकदा कृतमिति किमर्थं न त्यजति? शरीरधारणार्थं भोजनं प्रतिदिनं यथा आत्मधारणार्थं अहं प्रतिवारं रामायणकथां श्रावयामि! त्रिंशत् वर्षाणां तपमिव मम रामायण-कल्पवृक्ष-काव्यं रचितम्। अपराणि दिनत्रये एकमासे एव रचितः स्यात्। श्रीरामचन्द्रः मया तत् रचितवान्। सः तावन्तं कालं स्वीकरोति चेत् अहं किं वा करोमि! – इति उक्तिः तस्य!

जैनेषु अमोघराघवं - दिवाकरकविः। यतिराजविजयचम्पू इति अहोबिल-सूरी-कविः चतुर्दशशतकस्य उत्तरार्धे रचितवान्। कविकरणपूरः परमानन्ददासः भागवतमाश्रित्य आनन्दवृन्दावनचम्पू। [01:00:30]| आन्द्रदेशीय-अभिनव-कालिदासेन भागवतचम्पूः। अनन्तभट्टस्य भारतचम्पूरिति प्रसिद्धः – विशिष्य यमकं (repetitions with differing meanings) करोति – तत्र श्लेषं (hidden meaning) साधयति । किंशुकस्य वदने रुचिरत्वम्, किंशुकस्य हृदयेपि वशित्वम् .. – किं शुकस्य / किंशुकवृक्षस्य। अनुप्रास-उत्प्रेक्षादि अलङ्काराः। चैतन्यमाहाप्रभोः समकालिकः कश्चन महाराष्ट्रादेशीयः जीवराजः, गोपालचम्पूः इति श्रीकृष्णपरमात्मनः जीवनमाश्रित्य कृतिं (स्वयमेव तस्य टिका/व्याख्यामपि) रचितवान्। वल्लीसहायनामकेन कविना शङ्करदिग्विजयचम्पूः। शेषकृष्णस्य पारिजातचम्पूः – गद्यभगे भाणभट्टस्य अनुकरणम् - वीररसवर्णनम्। नाथमुनिविजयचम्पूः – रामानुजदासः। भगवद्रामानुजानां जीवने नाथमुनिवर्णनम् उपलभ्यते। रामानुजचार्यः (भ्रातः) – श्रीरामनुजचम्पूः – तिरुपत्यां प्रकाशितः। रामनुजानां पितृव्येन रामानुजदेशिकेन अपि चम्पूकाव्यं रचितम्। रामभद्रेण भागवतचम्पूः – श्रीकृष्णदेवरायस्य भ्रातृव्यस्य वर्णनमपि अस्ति। तीर्थयात्रा (travelogue) अपि चम्पूकाव्येषु दृश्यते –

तीर्थ-यात्रा-प्रबन्ध-चम्पूः – समर-पुङ्गव-दीक्षित-कृतम् (सः एव आनन्दकन्दचम्पू-रचयितारः)। षोडषशताब्धे दैवज्ञसूरिः - नृसिंहचम्पूः। नारायण-भट्टात्रिः – १६/१७ शतके – पाञ्चाल-स्वयंवर-चम्पूः, राजसूय-याग[/प्रबन्ध]-चम्पूः, प्रणयकाव्यं कोटि-विरह-चम्पूः। श्रीकृष्णकविः १६ शतके – मन्दार-मरन्द-चम्पूः। कालहस्तिकविः (अप्पय्यदीक्षितानां शिष्यः) – वस-चरित्र-चम्पूः। वेङ्कटाध्वरिः (नीलकण्ठदीक्षितानां समकालीनः/सहपाठिः, अप्पय्यदीक्षितानां बान्धवः) – चत्वारि चम्पूकाव्यानि – वरदाभ्युदयचम्पूः/श्रीनिवासचम्पूः/उत्तरचम्पूः/विश्वगुणादर्शचम्पूः इति च - वडगलै सम्प्रदायस्तः – वेदान्तदेशिकः इव सः। नीलकण्ठदीक्षितस्य – नीलकण्ठविजयचम्पूः (एतस्य लघुकाव्यानि अपि विडम्बनपूरकानि (imitative?) प्रसिद्धानि)। यत्राप्रबन्धचम्पूः – केरलाभरणम् – रामचन्द्रदीक्षितः। आन्द्रदेशीयः ऊचिमञ्ची-तिम्मकविः – कुमुदचन्द्रिका।

अप्रकटितानि/अ-प्रकाषितानि बहूनि सन्त्यपि। [01:15:00]

Division of Chapters – गद्यकाव्येषु उच्छ्वासः/आश्वासः इति। पद्यकाव्येषु सर्गः इति। रूपकेषु अङ्कः। चम्पूकाव्येषु बहुविदाः! निरङ्कुशाः कवयः! [01:21:00]

**गद्यं कदा? पद्यं कदा?** – प्रकृतिवर्णनं यत्रावर्णनं शौर्यवर्णनं गद्यभगे, भावनकथना वीररसवर्णनं च पद्यभागे प्रायः कुर्वन्ति।

**मणिप्रवाळः** – दक्षिणदेशीयः भाषामिश्रितप्रकारः – (संस्कृतम् – तमिळ्/मलयालम्/प्राकृतम्…)

इतःपरं वैदिकासाहित्यपरिचयः पाठ्यते। आर्षकाव्यम् अनार्षकाव्यं च इति प्रकारौ। ऋषिः कः? तस्य रचना आर्षं कथं भवति। रामयणात् महाभारतात् स्वीकृताः काञ्चन सर्गान् साक्षात् पठामः च अग्रे – पदच्छेदः/अन्वयः इत्यादिसहितम् – वृत्तपरिचयमपि – शार्दूलविक्रीडिता इत्यादीनां भवति। अहं ग्रामं गच्छामि (वृत्तः नास्ति) – अहं ग्रामं गमिष्यामि – अनुष्टुप् चरणम्!

[01:31:47] -end-